# THE YOGA UPANISHADS

WITH THE COMMENTARY OF

# SRI UPANISHAD-BRAHMA-YOGIN

EDITED BY

PANDIT A. MAHADEVA SASTRI, B.A

DIRECTOR, ADYAR LIBRARY, ADYAR, MADRAS

PUBLISHED FOR THE ADYAR LIBRARY

(THEOSOPHICAL SOCIETY)

1920

अष्टोत्तरशतोपनिषत्सु

# योग-उपनिषदः

श्री उपनिषद्ब्रह्मयोगिविरचितव्याख्यायुता:

अडयार्-पुस्तकालयाध्यक्षेण

अ. महादेवशास्त्रिणा

संपादिता:

अडयार्-पुस्तकालयार्थे

प्रकटीकृताश्च

ॐ नमो
ब्रह्मादिभ्यो
ब्रह्मविद्यासंप्रदायकर्तृभ्यो
वंशऋषिभ्यो
नमो गुरुभ्यः

DEDICATED TO
Brahma and the Rishis,
The Great Teachers
Who handed down Brahmavidya
through Generations

## PREFACE

It will be remembered that Dr. F. O. Schrader, my predecessor in office, soon after taking charge of the Library in 1905, projected a scheme for the publication of the texts of the Minor Upanishads comprised in the collection of the well known One-Hundred-and-Eight Upanishads and brought out in 1912 the first volume of the Minor Upanishads, containing all those Upanishads which treat of Saṃnyāsa. After another interval of eight years I have the pleasure of issuing the second volume in the series comprising the Upanishads which treat of Yoga. This long interval in the publication of the first and the second volumes is due to several causes, not the least of which is the outbreak of war and the immediate removal of Dr. Schrader to the camp of war-prisoners. The interval though regrettable in many ways has proved beneficial in one respect. Since I took charge of the Library in 1916, I have been able to collect more materials and have also had the fortune of coming by a commentary of a single author on all the 108 Upanishads. This commentary by Sri Upanishad-Brahma-Yogin of a Kanchi Advaita Mutt, which is as clear and full as necessary, given side by side with the

text of the Upanishads will be valued more by the reader than the editor's own notes or those compiled by him from extraneous works, such as were appended at the end of the first volume by Dr. Schrader. The plan of giving the commentary along with the text has rendered it desirable to give in the body of the text that reading which is endorsed by the commentary and to note at foot only those variants which are found in the MSS. of the southern recension, reserving all other critical notes to the volumes of translations which will follow.

The materials available for a critical edition of the 108 Upanishads have been described in full by Dr. Schrader in the first volume, and it only remains for me to say that more MSS. have been since collected under each head. The MSS. on which the edition of the Upanishads contained in the present volume is based are the following:

अ — Adyar Library IX K 7—Devanāgari MS. containing Minor Upanishads with Appayadîkshita's commentary.

अ १. — Adyar Library XXXIV B 2—A Grantha MS. of 108 Upanishads.

क. — A Grantha MS. of 108 Upanishads lent by Mr. V. Kachchapesvara Iyer, B.A., B.L., of Vellore.

उ, उ १.— Adyar Library XXXVI E 1 and XXXIV I 6—Two copies of 108 Upanishads with S'rī Upanishad-Brahmendra-Yogin's

commentary in *Devanāgari* and Grantha characters respectively.

Except for any unforeseen cause, there will be no occasion for delay in the publication of the succeeding volumes of the text and the commentary according to the present plan. One volume at least of the size of the present one may be issued every year. I can, however, make no promise at present as to when the first volume of the English translation of these Upanishads will appear.

ADYAR.
*August, 1920*

A. MAHADEVA SASTRI

# विषयसूचिका

## अद्वयतारकोपनिषत्


| | |
|---|---|
| तारकयोगाधिकारः | १ |
| योगोपायतत्फलम् | २ |
| तारकस्वरूपम् | २ |
| लक्ष्यत्रयानुसन्धानविधिः | ३ |
| अन्तर्लक्ष्यलक्षणम् | ३ |
| बहिर्लक्ष्यलक्षणम् | ४ |
| मध्यलक्ष्यलक्षणम् | ४ |
| द्विविधं तारकम् | ५ |
| तारकयोगसिद्धिः | ५ |
| मूर्तामूर्तभेदेन द्विविधं अनुसन्धेयम् | ६ |
| तारकयोगस्वरूपम् | ७ |
| शाम्भवीमुद्रा | ७ |
| अन्तर्लक्ष्यविकल्पाः | ८ |
| आचार्यलक्षणम् | ९ |
| ग्रन्थाभ्यासफलम् | ९ |


## अमृतनादोपनिषत्


| | |
|---|---|
| श्रवणाद्युपायः | ११ |
| प्रणवोपासना | १२ |

| | |
|---|---|
| प्रत्याहारलक्षणम् | १४ |
| षडंगयोगः | १४ |
| प्राणायामादिफलम् | १४ |
| त्रिविधप्राणायामः | १५ |
| प्राणायामलक्षणम् | १५ |
| रेचकलक्षणम् | १६ |
| पूरकलक्षणम् | १६ |
| कुम्भकलक्षणम् | १६ |
| धारणालक्षणम् | १७ |
| तर्कलक्षणम् | १७ |
| समाधिलक्षणम् | १८ |
| समाधिसिद्ध्युपायः | १८ |
| योगस्य नित्यकर्तव्यता | २० |
| स्वप्राप्तिद्वाराणि | २० |
| भयादीनां त्यागः | २१ |
| अभ्यासफलम् | २२ |
| योगचिन्त्यम् | २२ |
| चिन्तनाप्रकारः | २३ |
| श्वासप्रमाणम् | २३ |
| प्राणादीनां स्थानानि | २४ |
| तेषां वर्णभेदाः | २४ |
| परमफलम् | २४ |

## अमृतबिन्दूपनिषत्

| | |
|---|---|
| मन एव बन्धमोक्षयोः कारणम् | २६ |
| मनोनिरोधो मोक्षोपायः | २७ |

ब्रह्मज्ञानेन ब्रह्मभावप्राप्तिः . . . २८
सविशेषब्रह्मानुसन्धानेन निर्विशेषब्रह्माधिगमः . . २८
आत्मन एकत्वम् . . . . ३०
आत्मनो जन्मनाशराहित्यम् . . . ३१
निरुपाधिकात्मदर्शनम् . . . . ३१
शब्दब्रह्मध्यानेन परब्रह्माधिगमः . . . ३२
सर्वभूतप्रत्यगात्मन एकत्वम् . . . ३३
तत्साक्षात्कारसाधनं ध्यानम् . . . ३४

## क्षुरिकोपनिषत्

योगाधिकारः . . . . ३७
आसनप्राणायामौ . . . . ३७
प्रत्याहारः . . . . . ३८
धारणाध्यानसमाधयः . . . . ४०
योगसाधनं तदधिकारी च. . . . ४२
सामाधिफलम् . . . . ४४

## तेजोबिन्दूपनिषत्

### प्रथमोऽध्यायः

निर्विशेषतेजोबिन्दुस्वरूपम् . . . ४५
निर्विशेषब्रह्मावगतिसाधनानि . . . ४६
परवस्तुन एव सविशेषत्वादिभावाः . . . ४८
परब्रह्मावगतिसाधनं पञ्चदशाङ्गयोगः . . ५१
पञ्चदशाङ्गानां लक्षणानि . . . ५१
योगाभ्यासेन ब्रह्मभावनम् . . . ५५
समाधिविघ्नशमनम् . . . . ५५
समाधिना शुद्धब्रह्मपदप्राप्तिः . . . ५६

द्वितीयोऽध्यायः


सर्वस्य अखण्डैकरसत्वम् . . . . ५८
सर्वस्य चिन्मात्रत्वभावना . . . ६०
विद्याफलम् . . . . . . ६३


तृतीयोऽध्यायः


आत्मनः सच्चिदानन्दब्रह्मत्वानुभवः . . . ६४
आत्मनि सर्वप्रविभक्तरूपाभावानुभवः . . ७०
स्वेतरस्य सर्वस्य असत्त्वानुभवः . . . ७१
अहंब्रह्मास्मीत्यात्ममन्त्राभ्यासः . . . ७२


चतुर्थोऽध्यायः


जीवन्मुक्तिः—प्रत्यगभिन्नब्रह्मभावापत्तिः . . ७४
विदेहमुक्तिः—निष्प्रतियोगिकस्वमात्रब्रह्ममात्रावस्थानम् . ७८
स्वात्मनिष्ठाविधिः . . . . . ८५


पञ्चमोऽध्यायः


स्वात्मयाथात्म्यम् . . . . . ८६
अनात्मनः सर्वस्य मिथ्यात्वम् . . . ८८
अहंवस्तुनः परमात्मत्वम् . . . ९४
अविद्यातत्कार्यप्रपञ्चस्य निष्प्रतियोगिकाभावरूपत्वम् . ९६
सङ्कल्पादिरूपं मन एव सर्वानर्थहेतुः . . . ९८


षष्ठोऽध्यायः


सर्वस्य सच्चिदानन्दत्वम् . . . . १००
सर्वस्य ब्रह्मत्वम् . . . . . १०१
ब्रह्मणः निष्प्रतियोगिकस्वमात्रत्वम् . . . १०५

स्वातिरिक्तप्रपञ्चस्यासत्त्वम् . . . १०८
अहंब्रह्मेति भावनाविधिः . . . . ११२
शास्त्रसंप्रदायविधिः . . . . ११५

## त्रिशिखिब्राह्मणोपनिषत्

आत्मब्रह्मविषये प्रश्नाः . . . . ११६
सर्वस्य शिवत्वम् . . . . ११७
ब्रह्मणः अखिलजगदुत्पत्तिः . . . ११७
एकस्य पिण्डस्य बहुधा विभागः . . . ११८
आकाशादीनामंशभेदाः . . . . ११८
तेषां विषयभेदाः . . . . ११९
सूक्ष्मभूतमात्राः . . . . ११९
आध्यात्मिकादिविभागः . . . . ११९
ज्ञातृव्यापाराभिव्यक्तिः . . . . १२०
ब्रह्मणः सकाशात् पञ्चीकरणान्ता सृष्टिः . . १२१
चराचरात्मकविश्वसृष्टिः . . . . १२२
अवस्थाचतुष्टयम् . . . . १२३
दक्षिणोत्तरायणगतिः . . . . १२५
सद्योमुक्तिप्रापकं ज्ञानम् . . . . १२६
ज्ञानोपायभूतो योगः . . . . १२७
कर्मज्ञानयोगौ . . . १२७
निर्विशेषब्रह्मज्ञानोपायः अष्टांगयोगः . . . १२८
दशविधयमनियमाः . . . . १२९
हटयोगरीत्या आसनानि . . . . १२९
नाडीशुद्धिपूर्वकप्राणायामविधिः . . . १३२

अग्निमण्डलस्वरूपम् . . . . १३२
नाभिस्थानम . . . . १३३
नाडीचक्रे जीवभ्रमणम् . . . . १३३
कुण्डलिनीस्थानं तद्व्यापारश्च . . . १३४
देहमध्यस्थनाडीकन्दस्वरूपम् . . . १३४
नाडीचरा वायवः . . . . १३६
नाडीज्ञानपुरस्सरा नाडीशुद्धिः . . . १३८
योगाभ्यासस्थलं तद्विधिश्च . . . १३८
चिन्मुद्रासहितकेवलकुंभकम् . . . १३८
सहितप्राणायामः . . . . १३९
नाडीशोधकप्राणायामः . . . . १३९
प्राणायामफलम् . . . . १४०
प्राणधारणात् रोगनाशः . . . . १४१
षण्मुखीमुद्रया मनोजयः . . . . १४२
प्राणगतिः . . . . . १४२
प्राणगतिज्ञानेन योगावाप्तिः . . . १४३
मर्मस्थानेषु प्राणस्य प्रत्याहारः . . . १४४
धारणाप्रकारः . . . . १४५
देहावयवेषु पञ्चभूतधारणम् . . . १४५
पृथिव्यादिषु अनिरुद्धादिध्यानं तत्पलं च . . १४६
परमात्मध्यानं तत्फलं च . . . . १४७
तुरीयातीतं वासुदेवचैतन्यम् . . . १४७
सगुणध्यानम् . . . . १४८
निर्गुणध्यानम् . . . . १४९
सविशेषज्ञानस्यापि मुक्तिहेतुत्वम् . . . १४९

## दर्शनोपनिषत्

**प्रथमखण्डः**


जीवन्मुक्तिसाधनं अष्टांगयोगः . . . १९२
अष्टांगोद्देशः . . . . १९३
दशविधयमः . . . . १९३
अहिंसा . . . . . १९३
सत्यम् . . . . . १९३
अस्तेयम् . . . . . १९४
ब्रह्मचर्यम् . . . . . १९४
दया . . . . . १९४
आर्जवम् . . . . . १९४
क्षमा . . . . . १९५
धृतिः . . . . . १९५
मिताहारः . . . . . १९५
शौचम् . . . . . १९५
ब्रह्मात्मवेदनविधिः . . . . १९६


**द्वितीयखण्डः**


दशविधनियमः . . . . १९६
तपः . . . . . १९६
सन्तोषः . . . . . १९७
आस्तिक्यम् . . . . १९७
दानम् . . . . . १९७
ईश्वरपूजनम् . . . . . १९७
सिद्धान्तश्रवणम् . . . . १९७
ह्रीः . . . . . १९८

मतिः . . . . . १५८

जपः . . . . . १५८


तृतीयखण्डः


आसनानि नव . . . . १५९

स्वस्तिकम् . . . . . १५९

गोमुखम् . . . . . १५९

पद्मम् . . . . . १५९

वीरासनम् . . . . . १६०

सिंहासनम् . . . . . १६०

भद्रासनम् . . . . . १६०

मुक्तासनम् . . . . . १६०

मयूरासनम् . . . . . १६१

सुखासनम् . . . . . १६१

आसनजयफलम् . . . . १६१


चतुर्थखण्डः


देहप्रमाणम् . . . . . १६१

नाडीपरिगणनम् . . . . १६२

कुण्डल्याः स्थानं स्वरूपं च . . . १६३

नाडीस्थानानि . . . . १६३

नाडीषु वायुसञ्चारः . . . . १६४

वायुव्यापाराः . . . . १६५

नाडीदेवताः . . . . . १६६

नाडीषु चन्द्रसूर्यसंचारः . . . . १६६

नाडीषु संवत्सरात्मकप्राणसूर्यसंचारः . . . १६६

अन्तस्तीर्थप्राशस्त्यम् . . . . १६७

आत्मनि शिवदृष्टिः . . . . . १६९
ब्रह्मदर्शनेन ब्रह्मभावः . . . . १६९

पञ्चमखण्डः

नाडीशोधनम् . . . . . १७०
नाडीशुद्धिचिह्नानि . . . . . १७२
स्वात्मशुद्धिः . . . . . १७२

षष्ठखण्डः

प्राणायामलक्षणम् . . . . . १७२
पूरकादिलक्षणम् . . . . . १७४
प्राणायामसिद्धयः . . . . . १७४
रोगनिवर्तकप्राणायामभेदाः . . . १७५
षण्मुखीमुद्राऽभ्यासेन वायुजयः . . . १७६
वायुजयचिह्नानि . . . . . १७८
वायुजयेन रोगपापविनाशवैराग्यपूर्विका ज्ञानोत्पत्तिः . १७८

सप्तमखण्डः

प्रत्याहारलक्षणं तद्भेदाश्च . . . . . १७९
प्रत्याहारफलम् . . . . . १८०
वायुधारणात्मकप्रत्याहारः . . . १८०
वेदान्तसंमतप्रत्याहारः . . . . १८०

अष्टमखण्डः

पञ्चभूतेषु धारणा . . . . . १८१
आत्मनि धारणा . . . . . १८२

नवमखण्डः

सविशेषब्रह्मध्यानम् . . . . . १८२
निर्विशेषब्रह्मध्यानम् . . . . . १८३
ध्यानफलम् . . . . . . १८३

दशमखण्डः

समाधिस्वरूपम् . . . . . १८३
ब्रह्ममात्रावशेषः . . . . . १८४
उपसंहारः . . . . . . १८५

## ध्यानबिन्दूपनिषत्

ब्रह्मध्यानयोगमहिमा . . . . . १८६
ब्रह्मणः सूक्ष्मत्वं सर्वव्यापकत्वं च . . . १८७
प्रणवस्वरूपम . . . . . १८९
प्रणवध्यानविधिः . . . . . १९०
प्राणायामपूर्वकं प्रणवध्यानम् . . . १९१
प्रकारान्तरेण प्रणवध्यानम् . . . १९२
सविशेषब्रह्मध्यानम् . . . . . १९२
त्रिमूर्तिध्यानम् . . . . . १९३
हृदये ध्यानं तत्फलं च . . . . १९४
ब्रह्मायतने प्राणविलापनम . . . १९५
षडंगयोगः . . . . . १९६
आसनचतुष्टयम् . . . . . १९६
योनिस्थानम् . . . . . १९७
मूलाधारादिचतुश्चक्रस्वरूपम् . . . १९८
नाडीचक्रम . . . . . १९८

प्राणादिदशवायवः . . . . . १९९
जीवस्य प्राणापानवशत्वम् . . . २००
योगकाले प्राणापानैक्यम् . . . २००
अजपाहंसविद्या . . . . . २००
कुण्डलिनीबोधनेन मोक्षद्वारविभेदनम् . . . २०१
ब्रह्मचर्यादिना कुण्डलिनीबोधः . . . २०२
बन्धत्रयम् . . . . . . २०३
खेचरीमुद्राऽभ्यासः . . . . २०४
खेचर्यभ्यासेन वज्रोळिसिद्धिः . . . २०४
द्विविधबिन्द्वैक्यबोधतो जीवन्मुक्तत्वम् . . . २०५
महामुद्राऽभ्यासः . . . . २०६
हृदये आत्मसाक्षात्कारः . . . . २०७
नादानुसन्धानतः आत्मदर्शनम् . . . २१०


## नादबिन्दूपनिषत्


वैराजप्रणवस्वरूपम् . . . . . २१४
वैराजविद्याफलम् . . . . . २१५
प्रणवस्य प्रधानमात्राचतुष्टयस्वरूपम् . . . २१६
प्रणवस्य व्यष्टिसमष्ट्यात्मकद्वादशमात्राभेदविवरणम् . २१७
उपासकानां तत्तन्मात्राकालोत्क्रमणफलम् . . २१७
निर्विशेषब्रह्मस्वरूपं, तज्ज्ञानफलं च . . . २१८
ज्ञानिनः प्रारब्धकर्मभावाभावविचारः . . . २१९
तुरीयतुरीयाधिगमोपायभूतं नादानुसन्धानम् . . २२१
नादस्य मनोनियमनसामर्थ्यम् . . . २२३
उपेयनादस्वरूपम् . . . . २२४
नादारूढयोगिनां विदेहमुक्तिलाभः . . . २२५

## पाशुपतब्रह्मोपनिषत्

### पूर्वकाण्डः


जगन्नियन्तृविषयाः सप्तप्रश्नाः . . . . २२७
सप्तप्रश्नानामुत्तराणि . . . . २२८
सृष्टियज्ञे कर्त्रादिनिरूपणम् . . . २३
नादानुसन्धानयज्ञः . . . . २३
परमात्मनो हंसत्वनिरूपणम् . . . २३
यज्ञसूत्रब्रह्मसूत्रयोः साम्यम् . . . २३१
ब्रह्मयज्ञो ब्राह्मणाधिकारिकः . . . २३२
प्रणवहंसस्य ब्रह्मयज्ञत्वम् . . . . २३२
ब्रह्मसन्ध्याक्रियारूपो मनोयागः . . . २३३
हंसप्रणवाभेदानुसन्धानं अन्तर्यागः . . . २३३
षण्णवतिहंससूत्राणि . . . . २३५
हंसात्मविद्यैव मुक्तिः . . . . २३६
बाह्यापेक्षया आन्तरयागस्य श्रेष्ठत्वम् . . . २३७
ज्ञानयज्ञरूपोऽश्वमेधः . . . . २३८
तारकहंसज्योतिः . . . . २३८


### उत्तरकाण्डः


अखण्डवृत्त्या ब्रह्मसम्पत्तिः . . . २३९
परमात्मनि जगदाविर्भावो मायिकः . . . २४०
हंसार्कप्रणवध्यानविधिः . . . . २४१
परचित एव करणप्रेरकत्वम् . . . २४२
आत्मान्यस्य मायाकल्पितत्वम् . . . २४३
वस्तुतः स्वात्मनि मायाऽसम्भवः . . . २४३
आत्मज्ञानिनः ब्रह्मात्मत्वम् . . . २४४

सत्यादिपरविद्यासाधनम् . . . . २४५
स्वज्ञस्य क्वचिद्गमनाभावः . . . . २४६
ब्रह्मज्ञानिनः अभक्ष्याभावः . . . २४६
ज्ञानिनः स्वसर्वात्मत्वदर्शनम् . . . २४७

## ब्रह्मविद्योपनिषत्

ब्रह्मविद्यारहस्यार्थप्रणवब्रह्मसूचनम् . . . २४९
प्रणवमात्राचतुष्टयप्रपञ्चनम् . . . २५०
सुषुम्नायोगेन नाडीसूर्ययोः भेदनम् . . . २५१
प्रणवनादलयेन मोक्षप्राप्तिः . . . २५१
जीवस्वरूपनिरूपणम् . . . . २५२
बन्धमोक्षकारणनिरूपणम् . . . २५२
हंसविद्ययैव परमेश्वरप्राप्तिः . . . २५४
हंसविद्यागुरुभक्तिविधिः . . . . २५५
आत्मनःश्रुत्याचार्यैकगम्यत्वम् . . . २५५
सकलनिष्कलदेवताविवेकः . . . २५६
योगस्य परमगोप्यत्वं उत्तमाधिकारिण एव दातव्यत्वं च . २५८
केवलशास्त्रज्ञानवतोऽपि पापपुण्यलेपाभावः . . २५९
त्रिविधा आचार्याः . . . . २५९
प्रणवहंसानुसन्धानात्मकं प्रत्यक्षयजनम् . . २६०
हंसयोगलब्धज्ञानात् सायुज्यप्राप्तिः . . . २६१
हंसोपलब्धिस्थानम् . . . . २६२
हंसमन्त्रानुस्मरणपूर्वकसमाध्यभ्यासः . . . २६२
हंसस्यासननिरूपणम् . . . . २६३
हंसयोगाभ्यासक्रमः . . . . २६३
हंसयोगिनाऽनुसन्धेयं आत्मस्वरूपम् . . . २६७

## मण्डलब्राह्मणोपनिषत्

**प्रथमे ब्राह्मणे प्रथमः खण्डः**

आत्मतत्त्वजिज्ञासा . . . . २७३
सूक्ष्माष्टांगयोगप्रतिज्ञा . . . . २७३
चतुर्विधयमः . . . . २७४
नवविधयमनियमः . . . . २७४
आसनादिषडंगविवरणम् . . . . २७५
सूक्ष्मयोगाष्टांगज्ञानफलम् . . . . २७५

**प्रथमे ब्राह्मणे द्वितीयः खण्डः**

देहपञ्चदोषनिरसनम् . . . . २७६
तारकावलोकनं तत्फलं च . . . २७६
लक्ष्यत्रयावलोकनेन तारकप्राप्तिः . . . २७७
अन्तर्लक्ष्यदर्शनम् . . . . २७७
बहिर्लक्ष्यदर्शनम् . . . . २७८
मध्यलक्ष्यदर्शनम् . . . . २७८

**प्रथमे ब्राह्मणे तृतीयः खण्डः**

तारकामनस्कभेदेन द्विविधो योगः . . . २७९
मनोयोगविधिः . . . . २८०
पूर्वतारकम् . . . . . २८०
उत्तरतारकम् . . . . . २८०
उत्तरतारकस्य शाम्भवीपर्यवसानम् . . . २८०
अन्तर्लक्ष्यलक्षणम् . . . . २८१

**प्रथमे ब्राह्मणे चतुर्थः खण्डः**

अन्तर्लक्ष्ये वादिविप्रतिपत्तिः . . . २८१

सर्वलक्ष्यानुस्यूतात्मदर्शनविधिः . . . २८२
आत्मनिष्ठस्य ब्रह्मभावप्राप्तिः . . . २८२

**द्वितीये ब्राह्मणे प्रथमः खण्डः**

सर्वाधारज्योतिरात्मनः अन्तर्लक्ष्यत्वम् . . २८३
ज्योतिरात्मज्ञानफलम् . . . . २८३
शाम्भव्या तदधिगमः . . . . २८४
पूर्णिमादृष्टिविधिः . . . . २८४
पूर्णिमादृष्टेः शाम्भवीपर्यवसानम् . . . २८५
मुद्रासिद्धिः तच्चिह्नानि च . . . . २८५

**द्वितीये ब्राह्मणे द्वितीयः खण्डः**

प्रणवस्वरूपप्रत्यक्प्रकाशानुभवः, तच्चिह्नानि च . . २८६
षण्मुख्या प्रणवाधिगमः . . . . २८६
प्रणवविदः कर्मलेपाभावः . . . २८६
उन्मन्यवस्थाद्वारा अमनस्कसिद्धिः . . . २८७
अमनस्कपूजाप्रकारः . . . . २८७

**द्वितीये ब्राह्मणे तृतीयः खण्डः**

ब्रह्मानुसन्धानेन कैवल्यप्राप्तिः . . . २८८
ब्रह्मवित्स्वरूपम् . . . . २८९
सुषुप्तिसमाध्योः भेदः . . . . २८९
ब्रह्मविदो ब्रह्मभावः . . . . २८९
सङ्कल्पत्यागपूर्वकपरमात्मध्यानेन मुक्तिसिद्धिः . . २९०

**द्वितीये ब्राह्मणे चतुर्थः खण्डः**

जाग्रदादिपञ्चावस्थाः . . . . २९०
प्रवृत्तिसङ्कल्पः . . . . २९०

निवृत्तिसङ्कल्पः . . . . २९१

संसारतरणमार्गः . . . . २९१

मनसो बन्धमोक्षहेतुत्वनिरूपणम् . . . २९२

द्वितीये ब्राह्मणे पञ्चमः खण्डः

निर्विकल्पकसमाध्यभ्यासेन ब्रह्मविद्वरत्वप्राप्तिः . . २९३

अपरिच्छिन्नानन्दरूपब्रह्मावाप्तिः . . . २९३

तृतीये ब्राह्मणे प्रथमः खण्डः

शाम्भवीमुद्राऽन्वितं अमनस्कम . . . २९४

परमात्मप्रत्ययलक्ष्यदर्शनेन अमनस्कप्राप्तिः . . २९४

ततः संसारनिवृत्तिः . . . . २९५

तारकमार्गेण करणविलयद्वारा मनोनाशः . . २९५

तृतीये ब्राह्मणे द्वितीयः खण्डः

उन्मनीप्राप्त्या योगिनो ब्रह्मात्मभवनम . . २९६

चतुर्थं ब्राह्मणम

व्योमपञ्चकज्ञानं तत्फलं च . . . २९७

राजयोगसर्वस्वक्रोडीकरणम . . . २९८

पञ्चमं ब्राह्मणम

परमात्मनि मनोलयाभ्यासविधिः . . . २९८

अमनस्काभ्यासेन ब्रह्मावस्थानसिद्धिः . . . २९९

अमनस्कसिद्धस्य महिमा . . . . ३००

## महावाक्योपनिषत्

अपरोक्षानुभवोपदेशाधिकारी . . . ३०१
विद्याऽविद्ययोः स्वरूपं कार्यं च . . . ३०२
हंसविद्याऽभ्यासेन परमात्माविर्भावः . . . ३०३
तत्त्वज्ञानवृत्तिस्वरूपम् . . . . ३०४
प्रणवहंसज्योतिर्ध्यानम् . . . . ३०५
हंसज्योतिर्विद्याफलम् . . . . ३०६

## योगकुण्डल्युपनिषत्

प्रथमोऽध्यायः

वायुजयोपायत्रयम् . . . . ३०७
मिताहारः . . . . . ३०८
पद्मवज्रासने . . . . . ३०८
शक्तिचालनं तत्साधनद्वयं च . . . ३०८
सरस्वतीचालनम् . . . . ३०९
प्राणायामभेदाः . . . . ३१०
सूर्यकुंभकः . . . . . ३१०
उज्जायीकुंभकः . . . . ३११
शीतलीकुंभकः . . . . ३११
भस्त्रकुंभकः . . . . . ३१२
बन्धत्रयविधिः . . . . ३१२
मूलबन्धः . . . . . ३१३
उड्डियाणबन्धः . . . . ३१३
जालन्धरबन्धः . . . . ३१४
अभ्यासकुंभकसङ्ख्यानियमः . . . ३१४

योगाभ्यासविघ्नाः तत्त्यागश्च . . . ३१४
योगाभ्यासेन कुण्डलिनीबोधः . . . ३१५
ग्रन्थित्रयभेदेन कुण्डलिन्याः सहस्रारगमनम् . . ३१६
प्राणादिविलयः विलीनानां बहिःप्रसरश्च . . ३१७
समाधौ सर्वस्य चिन्मात्रत्वानुभवः . . . ३१८
समाधियोगः . . . . . ३२०

द्वितीयोऽध्यायः

खेचरीविद्या . . . . . ३२१
खेचरीमन्त्रराजोद्धारः . . . . ३२४
मन्त्रजपात् खेचरीसिद्धिः . . . ३२४
खेचर्यभ्यासक्रमः . . . . ३२५

तृतीयोऽध्यायः

मेळनमन्त्रः . . . . . ३२८
अमावास्याप्रतिपत्पूर्णिमाभेदेन दृष्टिभेदः . . ३२९
पूर्णिमादृष्टिविधिः . . . . ३२९
प्राणाभ्यासात् विराड्रूपापत्तिः . . . ३३१
अभ्यासयोगेन विना न स्वात्मप्रकाशः . . ३३२
गुरूपदेशात् ब्रह्मज्ञानम् . . . . ३३२
वाग्वृत्त्यधिष्ठानं ब्रह्म . . . . ३३३
विश्वादिप्रपञ्चाधिष्ठानं ब्रह्म . . . ३३३
निष्प्रतियोगिकं ब्रह्म . . . . ३३४
ब्रह्मसिद्ध्युपायभूतं ध्यानम् . . . ३३४
जीवन्मुक्तिविदेहमुक्ती . . . . ३३५

## योगचूडामण्युपनिषत्

योगांगषट्कम् . . . . . ३३७
योगसिद्ध्ये आवश्यकं देहतत्त्वज्ञानम् . . . . ३३८
मूलाधारादिचक्राणि . . . . . ३३८
योनिस्थाने परमज्योतिर्दर्शनम् . . . . ३३८
स्वाधिष्ठानादिचक्रलक्षणम् . . . . ३३९
नाडीमहाचक्रम् . . . . . ३४०
नाडीस्थानानि . . . . . ३४१
नाडीसञ्चारिवायवः तद्व्यापाराश्च . . . . ३४१
प्राणचलनाचलनाभ्यां जीवचलनाचलने . . . ३४२
अजपागायत्र्या अनुसन्धानम् . . . . ३४३
कुण्डलिन्या मोक्षद्वारभेदनम् . . . . ३४३
बन्धत्रयम् . . . . . . ३४५
खेचरीमुद्रा . . . . . . ३४६
वज्रोल्यादियोगिलक्षणम् . . . . . ३४७
महामुद्रा . . . . . . ३४९
प्रणवजपः . . . . . . ३५०
प्रणवार्थरूपं ब्रह्म . . . . . ३५०
प्रणवावयवानां प्रत्येकमर्थः . . . . ३५२
तुरीयोङ्काराग्रविद्योतब्रह्म . . . . . ३५३
प्रणवार्थतुरीयहंसः . . . . . ३५४
केवलात्मप्रकाशकप्रणवजपः . . . . ३५५
प्रणवानुष्ठायिनोऽपि प्राणजय आवश्यकः . . . ३५५
नाडीशुद्धितः प्राणायामसिद्धिः . . . . ३५६
प्राणायामलक्षणम् . . . . . ३५७
नाडीशोधनम् . . . . . ३५७

मात्रानियमपूर्वकः प्राणायामः . . . ३५७
योगांगानां प्रत्येकं फलं तत्तारतम्यं च . . ३५९
षण्मुखीमुद्राऽभ्यासेन नादाभिव्यक्तिः . . . ३६०
प्राणाभ्यासः सर्वरोगनिरासकः . . . ३६१
प्राणाभ्यासे इन्द्रियप्रत्याहार आवश्यकः . . ३६१

## योगतत्त्वोपनिषत्

अष्टांगयोगजिज्ञासा . . . . ३६३
योगतत्त्वस्य दुर्लभत्वम् . . . . ३६४
परस्यैव जीवत्वम् . . . . ३६५
प्राकृतगुणवियुक्तस्य जीवस्य परमात्मत्वम् . . ३६६
ज्ञानयोगयोः युगपदभ्यासः . . . ३६६
ज्ञानस्वरूपम् . . . . ३६६
मन्त्रयोगादिः चतुर्विधो योगः . . . ३६७
आरम्भादयो योगावस्थाः . . . ३६७
मन्त्रयोगलक्षणम् . . . . ३६८
लययोगलक्षणम् . . . . ३६८
हठयोगांगानि . . . . ३६८
यमनियमासनेषु प्रधानांगानि . . . ३६९
योगाभ्यासविघ्नत्यागः . . . . ३६९
प्राणायामोचितमठासनयोः स्वरूपम् . . . ३७०
प्राणायामारम्भप्रकारः . . . . ३७०
मात्रानियमपूर्वकः प्राणायामः . . . ३७१
आन्तरालिकफलं नाडीशुद्धिः तच्चिह्नानि च . . ३७१
योगाभ्यासकाले आहारादिनियमः . . . ३७२
केवलकुम्भकसिद्धिः . . . . ३७२
प्रस्वेदादिसिद्धयः . . . . ३७३

| | |
|---|---|
| योगप्रतिबन्धनाशाय प्रणवजपः—आरम्भावस्था | ३७४ |
| घटावस्था | ३७५ |
| प्रत्याहारलक्षणम् | ३७५ |
| धारणास्वरूपम् | ३७५ |
| धारणासिद्धयः तद्गोपनविधिश्च | ३७६ |
| परिचयावस्था | ३७७ |
| पञ्चभूतमण्डलेषु पञ्चब्रह्मधारणानि | ३७८ |
| सगुणध्यानम् | ३८० |
| निर्गुणध्यानतः समाधिसिद्धिः | ३८० |
| सिद्धयोगस्य स्वेच्छया देहत्यागात्यागौ | ३८१ |
| महाबन्धलक्षणम् | ३८२ |
| महावेधलक्षणम् | ३८२ |
| खेचरीस्वरूपम् | ३८३ |
| बन्धत्रयस्वरूपं तत्फलं च | ३८३ |
| विपरीतकरणीलक्षणं तत्फलं च | ३८४ |
| वज्रोळीस्वरूपम् | ३८४ |
| अमरोळीस्वरूपम् | ३८५ |
| राजयोगनिष्पत्तिः | ३८५ |
| वैराग्यहेतुनिरूपणम् | ३८६ |
| हृत्पद्मे प्रणवोपासनम् | ३८७ |
| सर्वकरणव्यापारोपरतिः आत्मावगत्युपायः | ३८८ |

## योगशिखोपनिषत्

### प्रथमोऽध्यायः

| | |
|---|---|
| मुक्तिमार्गजिज्ञासा | ३९० |
| मुक्तिमार्गस्य दुर्लभत्वम् | ३९१ |

ब्रह्म केवलशास्त्रागम्यम् . . . . ३९१
ब्रह्मणो जीवभावः . . . . ३९२
कामादिदोषविमुक्तजीवस्य शिवत्वम् . . . ३९२
ज्ञानयोगाभ्यां दोषविनाशः . . . ३९३
ज्ञानस्वरूपं तत्फलं च . . . . ३९४
आभासज्ञान्यज्ञानिनोरविशेषः . . . ३९५
आभासज्ञानिनो योगेन विना न मोक्षसिद्धिः . . ३९६
आभासज्ञानिनां दुःखानिवृत्तिः . . . ३९७
अहम्भाव एव सर्वानर्थमूलम् . . . ३९८
योगसिद्धस्य ईश्वरत्वं जीवन्मुक्तत्वं च . . ३९९
आभासज्ञानिनां विडम्बनम् . . . ४००
तेषां सिद्धसंगत्या कृतकृत्यत्वम् . . . ४०१
ज्ञानयोगयोः मिथः कार्यकारणत्वम् . . . ४०१
योग एव परमो मोक्षमार्गः . . . ४०१
योगसंस्कृतमनस्येव आत्मज्ञानोत्पत्तिः. . . ४०२
योगाभ्यास एव प्रथमकृत्यम् . . . ४०३
योगशिखोपदेशः . . . . ४०४
योगाभ्यासात् परमपदसाक्षात्कारः . . . ४०५
ध्यानाशक्तस्य पुण्यलोकप्राप्तिः . . . ४०६
लब्धयोगस्य स्वात्मबोधः . . . . ४०६
योगाभ्यासार्थं जितप्राणगुरूपसदनम् . . . ४०७
सरस्वतीचालनम् . . . . ४०७
कुण्डलीचालनेन ग्रन्थित्रयभेदः . . . ४०७
कुम्भकचतुष्टयाभ्यासविधिः . . . ४०८
सूर्यकुम्भकलक्षणम् . . . . ४०९

उज्जायीकुम्भकलक्षणम् . . . . ४०९
शीतलीकुम्भकलक्षणम् . . . . ४१०
भस्त्रिकाकुम्भकलक्षणम् . . . . ४१०
बन्धत्रयविधिः . . . . ४१०
मूलबन्धः . . . . . ४११
उड्डियाणबन्धः . . . . ४११
जालन्धरबन्धः . . . . ४१२
कुण्डल्या ग्रन्थित्रयविभेदनेन निर्विकल्पकप्राप्तिः . . ४१२
सुषुम्नायाः मोक्षमार्गत्वं कालभोक्तृत्वं च . . ४१३
सुषुम्नायोगेन ब्रह्मज्ञानसिद्धिः . . . ४१४
योगाभ्यासेन स्वरूपावस्थितिसिद्धिक्रमः . . ४१५
मन्त्रादियोगचतुष्टयात्मको महायोगः . . . ४१६
मन्त्रयोगः . . . . . ४१६
हठयोगः . . . . . ४१६
लययोगः . . . . ४१७
राजयोगः . . . . . ४१७
योगसामान्यस्वरूपं योगेन मुक्तिप्राप्तिश्च . . ४१७
असिद्धयोगस्य मृतस्य उत्तरजन्मनि सिद्धिप्रकारः . . ४१८
अभ्यासयोगादेव मुक्तिः . . . . ४१८
योगिनः सर्वैश्वर्यजीवन्मुक्त्यादिसिद्धिलाभः . . ४१९
कृत्रिमाकृत्रिमसिद्धीनां गोपनविधिः . . . ४२०
योगसिद्धजीवन्मुक्तयोः सूचकम् . . . ४२१
देहे सत्यपि ज्ञानिनो विदेहमुक्तिलाभः. . . ४२२
पिण्डाण्डस्य शिवालयत्ववर्णनम् . . . ४२४
आधारषट्कपीठचतुष्टययोः विवरणम् . . . ४२९

द्वितीयोऽध्यायः


योगज्ञानाधिकारी . . . . . ४२६
प्रणवाख्यमूलमन्त्रमहिमा . . . . ४२७
मूलमन्त्रत्वनिर्वचनम् . . . . ४२८
नादलिंगत्वनिर्वचनम् . . . . ४२८
सूत्रत्वनिर्वचनम् . . . . ४२८
प्रणवस्य बिन्दुपीठत्वम् . . . . ४२९
निर्विशेषप्रणवब्रह्मावगत्युपायः . . . ४२९
स्थूलसूक्ष्मबीजरूपैः त्रिविधं ब्रह्म . . . ४३०
शुद्धतत्त्वस्य आत्ममन्त्राभ्यामेकवेद्यत्वम् . . ४३०
परतत्त्वाभिव्यक्तिचिह्नानि . . . . ४३०
नादानुसन्धानमहिमा . . . . ४३१
गुरुभगवद्भक्तेरेव परतत्त्वज्ञानसम्भवः . . . ४३१


तृतीयोऽध्यायः


नादब्रह्मणः परापश्यन्त्यादिरूपचतुष्टयम . . ४३२
वैखरीस्वरूपविवरणम् . . . . ४३३
वैखरीसाक्षात्कारात् वाक्सिद्धिः . . . ४३४
परमाक्षरस्वरूपम् . . . . ४३४
शब्दब्रह्मभक्तिभावनाभ्यां परब्रह्माधिगमः . . ४३६


चतुर्थोऽध्यायः


जीवस्य अमर्त्यत्वम् . . . . ४३७
सर्वप्रपञ्चस्य ब्रह्मत्वम् . . . . ४३७
ब्रह्मातिरिक्तदर्शनात् अनर्थप्राप्तिः . . . ४३८
व्यावहारिकप्रपञ्चस्य मिथ्यात्वम् . . . ४३९

स्वातिरिक्तप्रपञ्चस्य अत्यन्तासम्भवः . . . ४४०
अज्ञानकृतः आत्मनि देहाद्यारोपः . . . ४४०

पञ्चमोऽध्यायः

देहस्य विष्ण्वालयत्वम् . . . . ४४१
आधारषट्कपीठचतुष्टययोः विवरणम् . . . ४४२
नाडीचक्रस्वरूपम् . . . . ४४३
बिन्द्वग्निसोमात्मकं ब्रह्मशरीरत्रयम् . . . ४४४
पञ्चाग्निभावना, तत्फलं च . . . ४४५
कुण्डलिनीप्रबोधनम् . . . . ४४६
खेचरीमुद्राऽभ्यासः, तत्फलं च . . . ४४६
सहस्रारे नारायणभावनातः कैवल्यसिद्धिः . . ४४७
यथोक्तभावनायुक्तस्य तत्तत्सिद्ध्युपायाः . . ४४७
गुरुपूजाविधिः . . . . ४४८
योगशिखामहिमा . . . . ४४९
सिद्धिषु उपेक्षाविधिः . . . . ४४९

षष्ठोऽध्यायः

कुण्डलिनीशक्तेः उपासनाविधिः . . . ४५०
सुषुम्नास्वरूपम् . . . . ४५०
सुषुम्नायाः सर्वाधारत्वम् . . . . ४५१
पराशक्तेः उद्बोधनम् . . . . ४५२
परमात्मध्यानम् . . . . ४५३
आधारब्रह्मणि प्राणादिविलयान्मुक्तिः . . . ४५३
चक्रेषु ब्रह्मादिमूर्तिध्यानेन ब्रह्मरन्ध्रप्रवेशः . . ४५५
ब्रह्मरन्ध्रविलीनकरणस्य मुक्तिः . . . ४५६
सुषुम्नायोगमहिमा . . . . ४५६

चिच्छक्तिर्जीवयोः स्थानविवेकः . . . ४५७
वायुवशस्य जीवस्य हंसमन्त्रजपप्रकारः . . . ४५८
कुण्डल्यवस्थाभेदतो बन्धमुक्तिव्यवस्था . . ४५९
प्रणवस्य सर्वाधारत्वम् . . . . ४५९
चित्तचलनाचलनाभ्यां बन्धमुक्ती . . . ४५९
चित्तस्य स्वात्मानतिरिक्तत्वानुसन्धानेन ब्रह्मसाक्षात्कारः . ४६०
प्राणचित्तयोरविनाभावः . . . . ४६१
नादानुसन्धानं मनोलयहेतुः . . . ४६२
मनोयुक्तप्राणाभ्यासविधिः . . . ४६२
गुरूपदेशपूर्वकं अभ्यासं विना न ज्ञानोदयः . . . ४६३

## वराहोपनिषत्

प्रथमाध्यायः

तत्त्वसंख्याविकल्पाः . . . . ४६४
चतुर्विंशतितत्त्वानि . . . . ४६५
षट्त्रिंशत्तत्त्वानि . . . . ४६६
षण्णवतितत्त्वानि . . . . ४६६
तत्त्वातीतभगवद्भक्तेरेव मुक्तिः . . . ४६७
तत्त्वज्ञानफलम् . . . . ४६७

द्वितीयाध्यायः

साधनचतुष्टयसम्पत्तिः . . . . ४६८
ब्रह्मात्मज्ञान्येव कृतकृत्यः . . . . ४६९
आत्मनः सुखरूपत्वम् . . . . ४६९
आत्मनः स्वयंप्रकाशत्वम् . . . ४७०
आत्मनः मायातत्कार्यविलक्षणत्वम् . . . ४७०

ब्रह्मात्मज्ञानिनः ब्रह्मभावः . . . ४७१
अब्रह्मज्ञानिनः कर्मबन्धाभावः . . . ४७१
अज्ञानिज्ञानिनोः दर्शनस्थितिर्विलक्षणयम् . . ४७२
आत्मनि वस्तुतो बन्धमुक्त्यभावः . . . ४७३
बन्धनिवृत्तये ब्रह्मात्मानुसन्धानम् . . . ४७४
ब्रह्माप्तिसाधनभूतस्योपवासस्य निर्वचनम् . . ४७५
जीवन्मुक्तिसाधनं अपरोक्षज्ञानम् . . . ४७६
बाह्यान्तश्चिन्तात्यागविधिः . . . ४७६
भगवच्चिन्तनमेव सर्वचिन्तात्यागोपायः . . ४७६
सर्वकल्पनातीतं ब्रह्मैव चिन्तनीयम् . . . ४७७
प्रत्यगभिन्नब्रह्म सर्वावस्थाऽतीतम् . . . ४७९
निर्विशेषब्रह्मज्ञानेन ब्रह्मभावः . . . ४७९
जगद्विलापनपुरस्सरं ब्रह्मैकत्वचिन्तनम् . . ४८०
प्रत्यगभिन्नब्रह्मविषयको विद्वदनुभवः . . . ४८०
समाधिसाधनं नादानुसन्धानम् . . . ४८३

## तृतीयाध्यायः

अद्वितीयपरमात्मानुभवः . . . . ४८५
चिन्मात्रभावापत्तिसाधनमौनविधिः . . . ४८६
भगवतः सच्चिदानन्दत्वम् . . . ४८७
भगवद्भक्तिरेव मोक्षसाधनम् . . . ४८७
ईश्वरस्य सर्वसमत्वम् . . . . ४८८
चित्तमेव संसारकारणम् . . . . ४८९
अनात्मनि रागाद्यनुभवो विद्वल्लक्षणम् . . . ४९०

## चतुर्थाध्यायः—१. ब्राह्मणम्

सप्तभूमिकासु जीवन्मुक्तिभूमिकाचतुष्टयम् . . ४९१
प्रणवविकृत्यकारादेः चातुर्विध्यम् . . . ४९२

अकारस्थूलादीनां अध्यक्षाः . . . . ४९२
प्रणवावयवशः भूमिकाभेदाः . . . . ४९३
चतुर्विधाः जीवन्मुक्ताः . . . . ४९३


चतुर्थाध्यायः—२. मन्त्रः


सप्तभूमिकानिर्देशः . . . . ४९४
सप्तभूमिकाविवरणम् . . . . ४९४
सप्तभूमिकासु बुद्ध्यवस्थाभेदनिरूपणम् . . ४९५
केवलब्रह्मात्मभावनाविधिः . . . ४९६
जीवन्मुक्तलक्षणम् . . . . ४९६
भूमब्रह्मनिष्ठाविधिः . . . . ४९८
विहंगमपिपीलिकामार्गविवेकः . . . ४९८
ब्रह्मविद्दृष्टिप्रसरस्य पावनत्वम् . . . ५००


पञ्चमाध्यायः


योगेच्छोः देहज्ञानं आवश्यकम् . . . ५०१
श्वाससंख्या . . . . . ५०२
देहक्षयनिवारणाय भूतधारणविधिः . . . ५०२
भूतधारणाय उड्याणबन्धाभ्यासः . . . ५०२
लयमन्त्रहठाख्यास्त्रयो योगाः . . . ५०३
योगाष्टांगानि . . . . . ५०३
यमनियमभेदाः . . . . ५०४
एकादशासनानि . . . . ५०४
चक्रासनलक्षणम् . . . . ५०४
प्राणायामः . . . . . ५०५
देहतदवयवमानानि . . . . ५०५

नाडीचक्रम् . . . . . ६०६
तुरीयदर्शनाभ्यासविधिः . . . . ६०६
कालवञ्चनोपायभूतो योगः . . . ६०७
कायदार्ढ्यबलादिसाधनभूता: योगाः . . . ६०७
देहच्छायाज्ञानविधिः . . . . ६०८
चतुष्पथबन्धोपायः सम्पुटयोगः . . . ६०९
सम्पुटाभ्यासेन ब्रह्मज्ञानप्राप्तिक्रमः . . . ६१०
शिवशक्तिस्थाननिरूपणम् . . . ६१०
ब्रह्मानुसन्धानसहितप्राणायामः . . . ६११
वेधकयोगाभ्यासक्रमः . . . . ६१२
विघ्नशान्तये प्रणवजपः . . . . ६१४
आरम्भादियोगभूमिकाचतुष्टयम् . . . ६१५
एतद्विद्यापठनवेदनयोः फलम् . . . ६१६


## शाण्डिल्योपनिषत्

### प्रथमाध्याये प्रथमः खण्डः


योगाष्टांगनिर्देशः . . . . ६१८
दशविधयमनिरूपणम् . . . . ६१९
दशविधनियमनिरूपणम् . . . . ६२०


### प्रथमाध्याये द्वितीयः खण्डः


अष्टविधासननिरूपणम् . . . . ६२१
आसनजयफलम् . . . . ६२२


### प्रथमाध्याये तृतीयः खण्डः


नाडीसंख्यादिजिज्ञासा . . . . ६२३
शरीरप्राणप्रमाणम . . . . ६२३

कुम्भकविधिः . . . . १२३
मनुष्यादीनां अग्निस्थानम् . . . १२३
मनुष्यादिदेहमध्यलक्षणम् . . . १२४
नाभिचक्रे जीवभ्रमणम् . . . . १२४
कुण्डलिनीस्वरूपचेष्टाः . . . . १२४
चतुर्दशनाड्यः . . . . १२५
सुषुम्नानाडी . . . . . १२५
सुषुम्नां परितः इतरनाडीस्थानानि . . . १२५
प्राणादिदशवायुस्थानचेष्टाः . . . १२६
नाडीशोधनविधिः . . . . १२७

प्रथमाध्याये चतुर्थः खण्डः

योगाधिकारियोगमठयोः लक्षणम् . . . १२८
प्राणायामारम्भप्रकारः . . . . १२८
नाडीशोधनप्राणाभ्यामकालावधिः . . . १२९
नाडीशुद्धिचिह्नानि . . . . १२९

प्रथमाध्याये पञ्चमः खण्डः

प्रणवात्मकप्राणायामः . . . . १२९
प्रणववर्णध्यानप्रकारः . . . . १३०
प्राणाभ्यासप्रकारः . . . . १३०

प्रथमाध्याये षष्ठः खण्डः

सुषुम्नामलशोधनार्थप्राणायामः . . . १३१
अहरहःकर्तव्यप्राणायामसंख्या . . . १३१
अभ्यासोचितसिद्धिभेदः . . . . १३१
अभ्यासकाले आहारनियमः . . . १३२

| | |
|---|---|
| अभ्यासे सावधानताविधिः | ६३२ |
| नाडीशुद्धितो मनोन्मन्यवस्थाप्राप्तिः | ६३२ |
| बन्धत्रयस्य कर्तव्यता | ६३३ |
| प्राणापानयोगफलम् | ६३३ |
| कपालशोधनोपायः | ६३३ |
| उज्जायीप्राणायामः | ६३४ |
| सीत्कारप्राणायामः | ६३४ |
| शीतलप्राणायामः | ६३४ |
| उपायोपेयकुम्भकद्वयम् | ६३४ |
| कुम्भकाभ्यासफलम् | ६३५ |
| वैष्णवीमुद्राप्राप्तिः | ६३५ |
| खेचरीप्राप्त्या ब्रह्मदर्शनम् | ६३५ |
| खेचर्या उन्मनीभावापत्तिः | ६३६ |
| कालापरिच्छिन्नब्रह्मप्राप्तिसाधनम् | ६३७ |
| मनोविलापनेन कैवल्यप्राप्तिः | ६३८ |
| योगज्ञानाभ्यां मनोलयः | ६३९ |
| मनोलयात् प्राणस्पन्दनिरोधः | ६३९ |
| प्राणस्पन्दनिरोधात् मनस्स्पन्दनिरोधः | ६४० |
| प्राणस्पन्दनिरोधविविधोपायाः | ६४० |
| कुम्भकेन सुषुम्नाभेदनद्वारा परमपदगमनम् | ६४२ |
| मनोयुक्तप्राणस्य सुषुम्नाप्रवेशनविधिः | ६४२ |
| खेचरीमुद्राप्राप्तिः | ६४३ |
| बाह्यखेचरीसिद्ध्युपायः | ६४४ |
| अभ्यासकाले प्राणजयोपायः | ६४४ |
| स्वात्मापरोक्षसिद्ध्युपायः | ६४५ |
| सर्वरोगविनिर्मोकसाधनं धारणाविशेषः | ६४५ |

नासाग्रादिषु संयमेन विविधसिद्धयः . . . १४१

प्रथमाध्याये सप्तमः खण्डः

पञ्चविधप्रत्याहारः . . . . १४८

प्रथमाध्याये अष्टमः खण्डः

पञ्चविधा धारणा: . . . . १४८

प्रथमाध्याये नवमः खण्डः

द्विविधं ध्यानम् . . . . १४९

प्रथमाध्याये दशमः खण्डः

समाधिस्वरूपम् . . . . १४९

द्वितीयोऽध्यायः

निर्विशेषब्रह्मस्वरूपम् . . . . १५०
ब्रह्मणः अनिर्देश्यत्वम् . . . . १५०
ब्रह्मणः अवाङ्मानसगोचरत्वम् . . . १५१
सर्वस्य परमात्मत्वम् . . . . १५१
गुरूपदेशतः सर्वात्मत्वज्ञानप्राप्तिः . . . १५२

तृतीयाध्याये प्रथमः खण्डः

ब्रह्मणो वस्तुतः निष्प्रतियोगिकस्वमात्रत्वम् . . १५२
ब्रह्मणो रूपत्रयम् . . . . १५३
निष्कलं ब्रह्म . . . . . १५३
सकलं ब्रह्म . . . . . १५४
सकलनिष्कलं ब्रह्म . . . . १५४

तृतीयाध्याये द्वितीयः खण्डः

सन्मात्रस्य परब्रह्मत्वनिर्वचनम् . . . ५५६
सन्मात्रस्य आत्मत्वनिर्वचनम् . . . ५५६
सन्मात्रस्य महेश्वरत्वनिर्वचनम् . . . ५५६
सन्मात्रस्य दत्तात्रेयत्वनिर्वचनम् . . . ५५६
निरुक्तिवेदनफलम् . . . . ५५७

## हंसोपनिषत्

ब्रह्मविद्यासाधनहंसविद्याया अतिगुह्यत्वम् . . ५५९
हंसविद्याऽधिकारिस्वरूपम् . . . ५६१
हंसस्वरूपं तज्ज्ञानफलं च . . . ५६१
हंसज्ञानोपायो योगः . . . . ५६२
हृत्पद्मे हंसभावनया तुर्यात्मदर्शनम् . . . ५६३
अजपाहंसमन्त्रजपप्रकारः . . . ५६५
सगुणहंसध्यानेन परमात्मदर्शनम् . . . ५६६
अजपाजपेन दशनादानुभवः . . . ५६७
केवलदशमनादाभ्यासविधिः . . . ५६८
तत्तन्नादानुभवफलम् . . . . ५६८
मनोलयात् ब्रह्मात्मत्वप्रकाशः . . . ५६९

## ADDENDUM

PREFACE, pp. ७–८ : Add to the list the following :

अ २. — Adyar Library XXXIII C 22—A Grantha MS. of 108 Upanishads.

मु. — The printed edition of 108 Upanishads published by Tukaram Javaji, Bombay, 1913, based on a South Indian MS.

# अद्वयतारकोपनिषत्

पूर्णमदः—इति शान्तिः

तारकयोगाधिकारः

अथातोऽद्वयतारकोपनिषदं व्याख्यास्यामो यतये जितेन्द्रियाय शमादिषड्गुणपूर्णाय ॥ १ ॥

उपनिषद्ब्रह्मयोगिविरचितं विवरणम्

ॐ श्रीमद्विश्वाधिष्ठानपरमहंससद्गुरुरामचन्द्राय नमः

द्वैतासम्भवविज्ञानसंसिद्धाद्वयतारकम् ।
तारकब्रह्मेति गीतं वन्दे श्रीरामवैभवम् ॥

इह खलु शुक्लयजुर्वेदप्रविभक्तेयं अद्वयतारकोपनिषत् राजयोगसर्वस्वं कटयन्ती ब्रह्ममात्रपर्यवसन्ना दृश्यते। अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते। त्र यथोक्ताधिकार्युद्देशेन श्रुतयः तारकयोगमुपदिशन्तीत्याह—अथेति॥ थ कर्मोपासनाकाण्डद्वयनिरूपणानन्तरं यतः तेन पुरुषार्थासिद्धिः अतः

तदर्थे यत्र स्वातिरेकेण द्वयं न विद्यते तत् अद्वयं ब्रह्म तन्मात्रबोधिनी विद्या **तारकोपनिषत** तां श्रुतयो वयं **व्याख्यास्यामः**। कस्मा अधिकारिण इत्यत आह—**यतय इति** । स्वाश्रमानुष्ठानपूर्वकं देशिकमुखतो वेदान्तश्रवणं ततो युक्तिभिः श्रुत्यविरुद्धाभिः मननं च कृत्वा निदिध्यासनाय यतत इति यतिः। अजितेन्द्रियस्य यतित्वं कुत इत्यत आह—**जितेन्द्रियायेति** । जितेन्द्रियस्य यतित्वोपपत्तेः । अरिषड्वर्गाक्रान्तस्य जितेन्द्रियता कुत इत्यत आह—**शमादिषड्गुणपूर्णायेति** । शमादिषड्गुणसम्पत्तेः अरिषड्वर्गोपगतिपूर्वकत्वात् । एवं साधनवते श्रुतयः तारकयोगमुपदिशन्तीत्यर्थः ॥ १ ॥

### योगोपायतत्फलम्

**चित्स्वरूपोऽहमिति सदा भावयन् सम्यङ्निमीलिताक्षः किंचिदुन्मीलिताक्षो वाऽन्तर्दृष्ट्या भ्रूदहरादुपरि सच्चिदानन्दतेजःकूटरूपं परं ब्रह्मावलोकयन् तद्रूपो भवति ॥ २ ॥**

एवं निदिध्यासनोपायतत्फलमाह—**चिदिति** ॥ योगी स्वान्तः चिद्रूपोऽस्मीति **भावयन्** अर्धोन्मीलितलोचनः भ्रूमध्यादौ सच्चिदानन्दमात्रं ब्रह्माहमस्मीत्यालोकयन् तद्रूपः तारकरूपो भवति ॥ २ ॥

### तारकस्वरूपम्

**गर्भजन्मजरामरणसंसारमहद्भयात् संतारयति तस्मात्तारकमिति । जीवेश्वरौ मायिकाविति विज्ञाय सर्वविशेषं नेति नेतीति विहाय यदवशिष्यते तदद्वयं ब्रह्म ॥ ३ ॥**

किं तारकमित्यत आह—**गर्भेति** ॥ "ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत् सदा यतिः ।" इति श्रुतिसिद्धज्योतिर्लिङ्गस्य प्रत्यग्रूपत्वेन

ाज्ञविकल्पितगर्भवासादिसंसारतारकत्वात् तारकं प्रत्यगात्मेत्यर्थः । जीवेशभेदे
ति प्रत्यगभिन्नब्रह्मभावः कुत इत्याशङ्क्य तयोर्भेदस्य मायिकत्वेन मिथ्यात्वात
तो यच्छिष्यते तदेव ब्रह्मेत्याह—जीवेति ॥ ३ ॥

लक्ष्यत्रयानुसन्धानविधिः

तत्सिद्धयै लक्ष्यत्रयानुसंधानं कर्तव्यम् ॥ ४ ॥

तदधिगमोपायः कथमित्यत आह तत्सिद्धया इति ॥ ४ ॥

अन्तर्लक्ष्यलक्षणम्

देहमध्ये ब्रह्मनाडी सुषुम्ना सूर्यरूपिणी पूर्णचन्द्राभा वर्तते । सा तु मूलाधारादारभ्य ब्रह्मरन्ध्रगामिनी भवति । तन्मध्ये तटित्कोटिसमानकान्त्या मृणालसूत्रवत् सूक्ष्माङ्गी कुण्डलिनीति प्रसिद्धाऽस्ति । तां दृष्ट्वा मनसैव नरः सर्वपापविनाशद्वारा मुक्तो भवति । फालोर्ध्वगललाटविशेषमण्डले निरन्तरं तेजस्तारकयोग-विस्फुरणेन पश्यति चेत् सिद्धो भवति । तर्जन्यग्रोन्मीलितकर्ण-रन्ध्रद्वये तत्र फूत्कारशब्दो जायते । तत्र स्थिते मनसि चक्षुर्मध्यगतनीलज्योतिस्स्थलं विलोक्य अन्तर्दृष्ट्या निरतिशयसुखं प्राप्नोति । एवं हृदये पश्यति । एवमन्तर्लक्ष्यलक्षणं मुमुक्षुभिरुपास्यम् ॥ ५ ॥

अन्तर्बाह्यमध्यभेदेन लक्ष्यं त्रिविधम् । तत्र अन्तर्लक्ष्यलक्षणं तदभ्यासफलं चाह—देहेति ॥ यदा कुण्डलिनी प्राणदृष्टिमनोग्निभिः

मूलाधारत्रिकोणाग्रालङ्कारसुषुम्नाऽधोवक्त्रं विभिद्य तन्मध्ये प्रविशति तदा बाह्यान्तःप्रपञ्चविस्मरणपूर्वकं मुन्यन्तःकरणं निर्विकल्पब्रह्मपदं भजति । मुनिः निर्विकल्पज्ञानात् विकल्पात् मुक्तो भवतीत्यर्थः । तत्सिद्ध्युपायः कः इत्यत आह—फालेति । तद्गतसुखानुभवोपायं वदन् अन्तर्लक्ष्यं उपसंहरति—तर्जनीति । सुखं प्राप्नोति, न केवलं कर्णरन्ध्रद्वये, एवं हृदये ॥ ५ ॥

बहिर्लक्ष्यलक्षणम्

अथ बहिर्लक्ष्यलक्षणम् । नासिकाग्रे चतुर्भिः षड्भिरष्टभिः दशभिः द्वादशभिः क्रमात् अङ्गुलान्ते नीलद्युतिश्यामत्वसदृग्रक्तभङ्गीस्फुरत्पीतवर्णद्वयोपेतं व्योम यदि पश्यति स तु योगी भवति । *चलदृष्ट्या व्योमभागवीक्षितुः पुरुषस्य दृष्ट्यग्रे ज्योतिर्मयूखा* वर्तन्ते । तद्दर्शनेन योगी भवति । तप्तकाञ्चनसंकाशज्योतिर्मयूखा अपाङ्गान्ते भूमौ वा पश्यति तद्दृष्टिः स्थिरा भवति । शीर्षोपरि द्वादशाङ्गुलसमीक्षितुः अमृतत्वं भवति । यत्र कुत्र स्थितस्य शिरसि व्योमज्योतिर्दृष्टं चेत् स तु योगी भवति ॥ ६ ॥

बहिर्लक्ष्यलक्षणमाह— अथेति ॥ योगी भवति इत्यादिकृत्स्नोपनिषत् प्रायशो मण्डलब्राह्मणोपनिषद्व्याख्यानेन व्याख्यातं स्यादिति मन्तव्यम् ॥ ६ ॥

मध्यलक्ष्यलक्षणम्

अथ मध्यलक्ष्यलक्षणं प्रातश्चित्रादिवर्णाखण्डसूर्यचक्रवत् वह्निज्वालावलीवत् तद्विहीनान्तरिक्षवत् पश्यति । तदाकाराकारितया

अवतिष्ठति । तद्भूयोदर्शनेन गुणरहिताकाशं भवति । विस्फुरत्तारकाकारदीप्यमानगाढतमोपमं परमाकाशं भवति । कालानलसमद्योतमानं महाकाशं भवति । सर्वोत्कृष्टपरमद्युतिप्रद्योतमानं तत्त्वाकाशं भवति । कोटिसूर्यप्रकाशवैभवसंकाशं सूर्याकाशं भवति । एवं बाह्याभ्यन्तरस्थव्योमपञ्चकं तारकलक्ष्यम् । तद्दर्शी विमुक्तफलस्तादृग्व्योमसमानो भवति । तस्मात् तारक एव लक्ष्यं अमनस्कफलप्रदं भवति ॥ ७ ॥

अन्तर्बाह्यलक्ष्यस्वरूपमुक्त्वा मध्यलक्ष्यस्वरूपमाह—अथेति ॥ तद्दर्शी विमुक्तस्याज्ञानतत्कार्यफलः । यस्मादेवं तस्मात् ॥ ७ ॥

द्विविधं तारकम्

तत्तारकं द्विविधं पूर्वार्धं तारकं उत्तरार्धं अमनस्कं चेति । तदेष श्लोको भवति—

तद्योगं च द्विधा विद्धि पूर्वोत्तरविधानतः ।
पूर्वं तु तारकं विद्यात् अमनस्कं तदुत्तरमिति ॥ ८ ॥

तारकयोगसिद्धिः

अक्ष्यन्तस्तारयोः चन्द्रसूर्यप्रतिफलनं भवति । तारकाभ्यां सूर्यचन्द्रमण्डलदर्शनं ब्रह्माण्डमिव पिण्डाण्डशिरोमध्यस्थाकाशे रवीन्दुमण्डलद्वितयमस्तीति निश्चित्य तारकाभ्यां तद्दर्शनम् ।

अत्राप्युभयैक्यदृष्ट्या मनोयुक्तं ध्यायेत्, तद्योगाभावे इन्द्रियप्रवृत्तेरनवकाशात्। तस्मात् अन्तर्दृष्ट्या तारक एवानुसंधेयः ॥ ९ ॥

ब्रह्माण्डवत् पिण्डाण्डेऽपि रवीन्दू विद्येते इति निश्चित्य तारकाभ्यां तदैक्यदर्शनतः तारकयोगसिद्धिः भवेदित्याह—**अक्षीति** ॥ अयोगी यथा ब्रह्माण्डस्थचन्द्रसूर्यौ मनस्सहकृततारकाभ्यां पश्यति तथा योगी स्वमस्तकाकाशविभातरवीन्दुद्वयं मनस्सहकृतताराभ्यां अवलोकयेदित्यर्थः। रूपदर्शनस्य चक्षुरधीनत्वात् किं मनसेत्यत आह—**तदिति**। मनसि अन्यत्र व्यापृते रूपादिग्रहणशक्तिः चक्षुरादेः नास्तीत्यत्र "अन्यत्रमना अभूवं नादर्शम्, अन्यत्रमना अभूवं नाश्रौषं" इत्यादिश्रुतेः। यस्मादेवं **तस्मात्** ॥ ९ ॥

मूर्तामूर्तभेदेन द्विविधमनुसन्धेयम्

तत्तारकं द्विविधं, मूर्तितारकं अमूर्तितारकं चेति। यत् इन्द्रियान्तं तत् मूर्तिमत्। यत् भ्रूयुगातीतं तत् अमूर्तिमत्। सर्वत्र अन्तःपदार्थविवेचने मनोयुक्ताभ्याम इष्यते। तारकाभ्यां तदूर्ध्वस्थसत्त्वदर्शनात् मनोयुक्तेन अन्तरीक्षणेन सच्चिदानन्दस्वरूपं ब्रह्मैव। तस्मात् शुक्लतेजोमयं ब्रह्मेति सिद्धम्। तद्ब्रह्म मनःसहकारिचक्षुषा अन्तर्दृष्ट्या वेद्यं भवति। एवं अमूर्तितारकमपि। मनोयुक्तेन चक्षुषैव दहरादिकं वेद्यं भवति, रूपग्रहणप्रयोजनस्य मनश्चक्षुरधीनत्वात् बाह्यवदान्तरेऽपि आत्ममनश्चक्षुःसंयोगेनैव रूपग्रहणकार्योदयात्। तस्मात् मनोयुक्ता अन्तर्दृष्टिः तारकप्रकाशाय भवति ॥ १० ॥

यदनुसन्धेयं तत् कतिविधं इत्यत्र तत्तारकं ॥ बाह्यपदार्थविवेचनवत् न्तःपदार्थविवेचनमपि मनश्चक्षुरधीनमित्याह— सर्वत्रेति । तदूर्ध्वस्थसत्व- नात् भ्रूमध्योर्ध्वविलसितोत्तरतारकलक्ष्यदर्शनात् । केनैतद्दर्शनीयमित्यत्र तोयुक्तेनेति । ब्रह्मैव उत्तरतारकलक्ष्यमित्यनुसन्धेयम् । यस्मादेवं तस्मात् । मध्यादिस्थलविलसितशुक्लतेजसो मनःकल्पितत्वेऽपि ब्रह्मणः सर्वव्यापकत्वेन ापि विद्यमानत्वात् तदेव ब्रह्मेति अभिमतिद्रढिम्ना लीने तत्र मनसि कल्पक- पेक्षकल्पनावैरळ्ये निर्विकल्पकं ब्रह्मैव अवशिष्यते इत्यर्थः । यत्तेजो मनः- ल्पितं तद्ब्रह्म । यस्मादेवं तस्मात् ॥ १० ॥

## तारकयोगस्वरूपम्

भ्रूयुगमध्यबिले दृष्टिं तद्द्वारा ऊर्ध्वस्थिततेज आविर्भूतं तारकयोगो भवति । तेन सह मनोयुक्तं तारकं सुसंयोज्य प्रयत्नेन भ्रूयुग्मं सावधानतया किंचिदूर्ध्वमुत्क्षेपयेत् । इति पूर्वतारकयोगः । उत्तरं तु अमूर्तिमत् अमनस्कमित्युच्यते । तालुमूलोर्ध्वभागे महान् ज्योतिर्मयूखो वर्तते । तत् योगिभिर्ध्येयम् । तस्मात् अणिमादि- सिद्धिर्भवति ॥ ११ ॥

कोऽयं तारकयोग इत्यत्र भ्रूयुगमध्यबिले तत्रत्याज्ञाचक्रे दृष्टियुग्मं नेवेश्य । सावधानतया विलोकयन् । ध्येयम् तज्ज्योतिः ब्रह्मेति योगि- श्चिन्त्यमित्यर्थः । ततः किं भवतीत्यत्र तस्मादिति ॥ ११ ॥

## शाम्भवीमुद्रा

अन्तर्बाह्यलक्ष्ये दृष्टौ निमेषोन्मेषवर्जितायां सत्यां शांभवी मुद्रा भवति । तन्मुद्रारूढज्ञानिनिवासात् भूमिः पवित्रा भवति ।

**तद्दृष्ट्या सर्वे लोकाः पवित्रा भवन्ति । तादृशपरमयोगिपूजा यस्य लभ्यते सोऽपि मुक्तो भवति ॥ १२ ॥** ८

यत् योगिभिः ध्येयमुक्तं पर्यवसाने तदेव शांभवी मुद्रा भवतीत्याह **अन्तरिति** ॥ **मुद्रा भवति** इत्यत्र

अन्तर्लक्ष्यं बहिर्दृष्टिः निमेषोन्मेषवर्जिता ।
एषा सा शाम्भवी मुद्रा सर्वतन्त्रेषु गोपिता ॥

इति श्रुतेः । तन्मुद्रारूढयोगिनं स्तौति—**तदिति** । **पवित्रा भवति** इत्यत्र "स्वपादन्यासमात्रेण पावयन् वसुधातलं" इति स्वरूपदर्शनोक्तेः । **पवित्रा भवन्ति**—

खेचरा भूचराः सर्वे ब्रह्मविद्दृष्टिगोचराः ।
सद्य एव विमुच्यन्ते कोटिजन्मार्जितैरघैः ॥

इति श्रुतेः ॥ १२ ॥

## अन्तर्लक्ष्यविकल्पाः

**अन्तर्लक्ष्यज्वलज्ज्योतिःस्वरूपं भवति । परमगुरूपदेशेन सहस्रारज्वलज्ज्योतिर्वा बुद्धिगुहानिहितचिज्ज्योतिर्वा षोडशान्तस्थ-तुरीयचैतन्यं वा अन्तर्लक्ष्यं भवति । तद्दर्शनं सदाचार्यमूलम् ॥ १३ ॥**

अन्तर्लक्ष्यं विकल्प्य निर्धारयति—**परमेति** ॥ उक्तविकल्पानां एकार्थपर्यवसायित्वात् तद्दर्शनमूलं किमित्यत्र—**तद्दर्शनमिति** ॥ १३ ॥

आचार्यलक्षणम्

आचार्यो वेदसंपन्नो विष्णुभक्तो विमत्सरः ।
योगज्ञो योगनिष्ठश्च सदा योगात्मकः शुचिः ॥ १४ ॥
गुरुभक्तिसमायुक्तः पुरुषज्ञो विशेषतः ।
एवंलक्षणसंपन्नो गुरुरित्यभिधीयते ॥ १५ ॥
गुशब्दस्त्वन्धकारः स्यात् रुशब्दस्तन्निरोधकः ।
अन्धकारनिरोधित्वात् गुरुरित्यभिधीयते ॥ १६ ॥
गुरुरेव परं ब्रह्म गुरुरेव परा गतिः ।
गुरुरेव परा विद्या गुरुरेव परायणम् ॥ १७ ॥
गुरुरेव परा काष्ठा गुरुरेव परं धनम् ।
यस्मात्तदुपदेष्टाऽसौ तस्माद्गुरुतरो गुरुरिति ॥ १८ ॥

आचार्यलक्षणमुक्त्वा गुरुशब्दार्थमाह—गुशब्दस्त्विति ॥ १४–१८ ॥

ग्रन्थाभ्यासफलम्

यः सकृदुच्चारयति तस्य संसारमोचनं भवति । सर्वजन्मकृतं पापं तत्क्षणादेव नश्यति । सर्वान् कामानवाप्नोति । सर्वपुरुषार्थसिद्धिर्भवति । य एवं वेदेत्युपनिषत् ॥ १९ ॥

ग्रन्थतदर्थपठनानुसन्धानफलमाह—य इति ॥ कामाकामधियां पठनफलं सर्वकामाप्तिः परमपुरुषार्थाप्तिश्च । इत्युपनिषच्छब्दः अद्वयतारकोपनिषत्समाप्त्यर्थः ॥ १९ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
अद्वयोपनिषद्व्याख्या लिखितेश्वरगोचरा ।
अद्वयोपनिषद्व्याख्याग्रन्थोऽशीतिरितीरितः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे त्रिपञ्चाशत्सङ्ख्यापूरकं अद्वयतारकोपनिषद्विवरणं सम्पूर्णम्

ॐ श्रीमद्विश्वाधिष्ठानपरमहंससद्गुरुरामचन्द्रार्पणमस्तु ॥

---

ॐ

# अमृतनादोपनिषत्

सह नाववतु—इति शान्तिः

श्रवणाद्युपायः

शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः ।
परमं ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेत् ॥ १ ॥

## विवरणम्

ॐ श्रीमद्विश्वाधिष्ठानपरमहंससद्गुरुरामचन्द्राय नमः

अमृतनादोपनिषत्प्रतिपाद्यं पराक्षरम् ।
त्रैपदानन्दसाम्राज्यं हृदि मे भातु संततम् ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं अमृतनादोपनिषत् । कठवल्ल्यादिसमं उपोद्घातादिकम् । षडङ्गयोगप्रकाशनात्मिकोपनिषदोऽल्पग्रन्थतो विवरणमारभ्यते । आदौ तावत्—विशुद्धचित्तानां श्रवणाद्युपायादेव पुरुषार्थसिद्धिः, मलिनचित्तानां ब्रह्मोपासनाविशिष्टषडङ्गयोगाभ्यासद्वारकज्ञानेन

पुरुषार्थसिद्धिः अस्यामुपनिषदि प्रतिपाद्यते । तत्रादौ मुख्याधिकारिणां श्रवणाद्युपायमाह—**शास्त्राणीति** । मुमुक्षून् प्रति सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति अनुशासनं कुर्वन्तीति **शास्त्राणि** ईशाद्यष्टोत्तरशतोपनिषत्संज्ञकानि श्रुतार्थधारणासमर्थो **मेधावी** ब्रह्मविद्वरिष्ठदेशिकमुखात् यथावत् अधीत्य यावत् संशयादिपञ्चदोषनिवृत्तिः **पुनः पुनः** तावत् **अभ्यस्य** श्रवणमनननिदिध्यासनानि नैरन्तर्येण कृत्वा तत्सञ्जातसम्यज्ज्ञानेन स्वातिरिक्ताविद्यापदतत्कार्यजातं यत्र पर्यवस्यति अपह्नवं भजति तत् **परमं** तन्मात्रतया उपबृंहणात् **ब्रह्म** निष्प्रतियोगिकस्वमात्रमिति **विज्ञाय** तज्ज्ञानसमकालं विद्वान् तद्भावमेत्य तन्मात्रतयाऽवशिष्यते । यतः शास्त्राभ्यासः एवं प्रभाववान् अतो ब्रह्मभावापत्त्यनन्तरमपि शास्त्राभ्यास एव अप्रमादेन कर्तव्य इत्यत आह—**उल्कावदिति** । यथा उल्काप्रकाशतो द्रव्यमालोक्य उल्कां परित्यजति तथा ब्रह्मभावापत्त्यनन्तरं तत्साधनानि **तानि** शास्त्राणि तत्प्रभवज्ञानं चापि **अथोत्सृजेत्** इत्यत्र

उल्काहस्तो यथा कश्चिद् द्रव्यमालोक्य तां त्यजेत् ।
ज्ञानेन ज्ञेयमालोक्य पश्चात् ज्ञानं परित्यजेत् ॥ इति,
आत्मानमात्मना साक्षात् ब्रह्म बुद्ध्वा सुनिश्चलम्
देहजात्यादिसंबन्धान् वर्णाश्रमसमन्वितान् ॥
वेदशास्त्रपुराणानि पदपांसुमिव त्यजेत् ॥ इति च श्रुतेः ॥ १ ॥

प्रणवोपासना

**ओंकाररथमारुह्य विष्णुं कृत्वाऽथ सारथिम् ।**
**ब्रह्मलोकपदान्वेषी रुद्राराधनतत्परः ॥ २ ॥**

**तावद्रथेन गन्तव्यं यावद्रथपथि [1]स्थितः ।**
**स्थात्वा रथपथिस्थानं रथमुत्सृज्य गच्छति ॥ ३**

[1] स्थितिः । स्थि—क.

**मात्रालिङ्गपदं त्यक्त्वा शब्दव्यञ्जनवर्जितम् ।**
**अस्वरेण मकारेण पदं सूक्ष्मं हि गच्छति ॥ ४ ॥**

प्रथममन्त्रेणोत्तमाधिकारिणां कृतार्थतामभिधाय मध्यममन्दाधिकारिणां तत्पदारोहाय प्रणववाच्यार्थोपासनां षडङ्गयोगं चाह—**ओङ्कारेति** । रथस्थानीयमोङ्कारं **आरुह्य** कांस्यघण्टानिनादवत् प्रणवोच्चारणपूर्वकं तदर्थानुसन्धानं कृत्वा रथ**सारथिं** बुद्धितत्त्वं **विष्णुं** व्यापकं प्रणवार्थेश्वराकाराकारितं कृत्वा । "बुद्धिं तु सारथिं विद्धि" इति श्रुतेः । ब्रह्मैव लोको ब्रह्मलोकः निर्विशेषपरमात्मा तद्रूपतया पश्यत इति ब्रह्मलोकपदं स्वमात्रतया अन्वेष्टुमिच्छतीति **ब्रह्मलोकपदान्वेषी** तदुपायत्वेन **रुद्राराधनतत्परो** भवेत् स्वातिरिक्तत्वेन पराग्भावमापन्नस्वाविद्यापदतत्कार्यभूतरुजं द्रावयतीति रुद्रः प्रत्यगात्मा तदाराधनं व्यष्टिसमष्ट्यन्तःकरणवृत्तिसहस्रभावाभावप्रकाशकप्रत्यगस्मीत्यनुसन्धानं तदेकनिष्ठत्वं तत्परत्वमित्यर्थः । आदौ ओङ्कारार्थेश्वरानुचिन्तनं, तदाकाराकारितान्तःकरणं प्रसन्नं सत् निर्विशेषब्रह्ममात्रावस्थितिं ईहते, तदुपायत्वेन प्रत्यगनुसन्धानं, ततः प्रत्यक्पराग्भावसापेक्षप्रत्यग्भावं विहाय निष्प्रतियोगिकब्रह्ममात्रतया अवशिष्यत इति भावः ॥ २ ॥ ब्रह्मभावापत्तावपि सदा प्रणवानुसन्धानं कर्तव्यमित्यत आह—**तावदिति** । **यावद्रथपथि** प्रणवानुसन्धानवर्त्मनि **स्थित**स्तिष्ठति **तावद्रथेन गन्तव्यं** ओङ्कारोच्चारणपूर्वकं अर्थानुसन्धानं कर्तव्यम् । एवं **रथपथिस्थानं** रथपथेन यत् गन्तव्यस्थानं निर्विशेषं ब्रह्म तत्र तन्मात्रावशेषतया **स्थात्वा** स्थित्वा ततः रथेन गन्तव्यप्रदेशस्य प्राप्तत्वात् ओङ्कार**रथमुत्सृज्य** तत्प्राप्यतुर्यतुर्यस्थानं **गच्छति** तुर्यतुर्यो भवतीत्यर्थः ॥ ३ ॥ तुर्यतुर्याधिगमोपायमाह—**मात्रेति** । सर्वव्यवहारहेत्वकारादयः स्वराः शब्दाः, ककारादीनि व्यञ्जनानि, तैः वर्जितं शब्दव्यञ्जनात्मकपञ्चाशद्वर्णव्यवहार्यप्रपञ्चकलनाविरळं यत् **मात्रालिङ्गपदं** अकारादिमात्रातदध्यक्षविश्वविराडोत्रादिरूपं **त्यक्त्वा** स्वातिरेकेण किञ्चिन्नास्तीति निश्चित्य अथ **अस्वरेण मकारेण** मकारार्थेश्वरभावेन निरावृतक्रियाज्ञानेच्छाशक्तिसम्पत्त्या यत् **सूक्ष्मं हि**

पदं विराजते तत् सूक्ष्मपदं ब्रह्म स्वमात्रमिति गच्छति मात्रालिङ्गशब्दव्यञ्जन-कलनापह्नवसिद्धब्रह्ममात्रतया मुनिः अवशिष्यत इत्यर्थः ॥ ४ ॥

प्रत्याहारलक्षणम्

**शब्दादिविषयान् पञ्च मनश्चैवातिचञ्चलम् ।**
**चिन्तयेदात्मनो रश्मीन् प्रत्याहारः स उच्यते ॥ ५ ॥**

मन्दाधिकारिचित्तशुद्धिहेतुषडङ्गयोगमुपदिशति । तत्र प्रत्याहार-स्वरूपमाह—**शब्दादीति** । "यद्यच्छृणोति कर्णाभ्यां तत्तदात्मेति भावयेत्" इत्यादिश्रुत्यनुरोधेन श्रोत्रादिग्राह्यपञ्च**शब्दादिविषयान् स्वात्मनो रश्मीन्** स्वात्मविकल्पितत्वेन स्वरूपभूतान् । **मनश्चेति** चशब्दतः सविषयान्तः-करणचतुष्टयं गृह्यते । तत्तु **अतिचञ्चलं** क्षणविकारित्वात् । तदप्यात्मनो रूपं **चिन्तयेत्** स्वात्मातिरिक्तविषयतः प्रत्याहरेदिति योऽर्थोऽभिहितः **सः प्रत्याहारः उच्यते** ॥ ५ ॥

षडङ्गयोगः

**प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा ।**
**तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥ ६ ॥**

योगषडङ्गानि गणयति—**प्रत्याहार इति** । स्पष्टोऽर्थः ॥ ६ ॥

प्राणायामादिफलम्

**यथा पर्वतधातूनां [1]दह्यन्ते धमता मलाः ।**
**तथेन्द्रियकृता दोषा दह्यन्ते प्राणधारणात् ॥ ७ ॥**

[1] दह्यते धमता मलम्—अ.

प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषम् ।

किल्बिषं हि क्षयं [1]नीत्वा रुचिरं चैव चिन्तयेत् ॥ ८ ॥

प्राणायामादिफलप्रदर्शनपूर्वकं प्राणायामादिप्रकारमाह—**यथेति** ॥ **यथा धमता** धमनाभिवर्धितवह्निना **पर्वतधातूनां मलाः** मलानि **दह्यन्ते तथा प्राणधारणात् दशेन्द्रियकृताः दोषा दह्यन्ते** ॥ ७ ॥ यत एवं अतः **प्राणायामैः** लिङ्गदेहाश्रय**दोषान् दहेत्** । तथा **धारणाभिश्च** अन्तःकरणगत**किल्बिषं** दहेत् । एवं अन्तःकरणज**किल्बिषं** अशुद्धिं **क्षयं नीत्वा रुचिरं** किल्बिषक्षयाधिकरणं **चैव** हीतिशब्दात् सर्ववृत्तिकुम्भकं मनःप्राणवृत्तिस्तम्भनं चिन्तयेत् ॥ ८ ॥

त्रिविधप्राणायामः

रुचिरं रेचकं चैव वायोराकर्षणं तथा ।

प्राणायामास्त्रयः प्रोक्ता रेचपूरककुम्भकाः ॥ ९ ॥

त्रिविधप्राणायाममाह—**रुचिरमिति** । कुम्भकरेचकपूरकभेदेन **प्राणायामाः त्रयः प्रोक्ताः** । अत्र रुचिरशब्दः कुम्भकवाची, रेचकपूरकसहपठितत्वात् ॥ ९ ॥

प्राणायामलक्षणम्

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।

त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ १० ॥

प्राणायामस्वरूपमाह—**सव्याहृतिमिति** । कुम्भकावस्थायां "ॐ भूः" इत्यादिप्रणवसम्पुटितसप्तव्याहृतिभिः "परोरजसेसावदोम्" इति **शिरसा** च

[1] तीर्त्वा—अ १.

सह गायत्रीं त्रिः पठेत् त्रिवारं मनसा उच्चरेदिति योऽर्थोऽभिहितः स प्राणायामः उच्यते ॥ १० ॥

रेचकलक्षणम्

उत्क्षिप्य वायुमा[1]काशे शून्यं कृत्वा निरात्मकम् ।
शून्यभावे नियुञ्जीयाद्रेचकस्येति लक्षणम् ॥ ११ ॥

रेचकलक्षणमाह—उत्क्षिप्येति । बाह्याकाशे **वायुमुत्क्षिप्य** तैलधारावत् मन्दंमन्दं विरेच्य अन्तः **निरात्मकं** वायुं **शून्यं कृत्वा शून्यभावे नियुञ्जीयात्** इति यत्तत् रेचकस्य लक्षणम् ॥ ११ ॥

पूरकलक्षणम्

[2]वक्त्रेणोत्पलनाळेन तोयमाकर्षयेन्नरः ।
एवं वायुर्ग्रहीतव्यः पूरकस्येति लक्षणम् ॥ १२ ॥

पूरकलक्षणमाह—वक्त्रेणेति । यथा नरो **वक्त्रेण** वक्त्रस्थोत्पलनाळेन वा **तोयं आकर्षयेत्** एवमिडया पिङ्गळया शीतल्या वा **वायुः ग्रहीतव्यः** इति यत्तत् पूरकस्य लक्षणम् ॥ १२ ॥

कुम्भकलक्षणम्

[3]नोच्छ्वसेन्न च [4]निश्वासेत् नैव गात्राणि चालयेत् ।
एवं भावं नियुञ्जीयात् कुम्भकस्येति लक्षणम् ॥ १३ ॥

[1] काशं—क, अ १, अ २. शे इत्येतत् शं इति शोधितं—अ.
[2] वक्रे—क. [3] नोच्छ्वासे—अ २. [4] निश्वसे—अ १.

**अन्धवत् पश्य रूपाणि शब्दं बधिरवच्छृणु ।**
**काष्ठवत् पश्य वै देहं [1]प्रशान्तस्येति लक्षणम् ॥ १४ ॥**

कुम्भकलक्षणमाह—**नोच्छ्वसेदिति** । सिद्धाद्यासनमास्थाय निश्चलगात्रो योगी रेचकपूरकव्यापारमकृत्वा एवं वायुस्तम्भनभावं नियुञ्ज्यादिति यत्तत् कुम्भकलक्षणम् ॥ १३ ॥ कुम्भकवेळायां अन्धबधिरवत् रूपशब्दादिव्यापृतिविरळो भूयादिति प्रशान्तलक्षणमाह—**अन्धवदिति** । अन्धबधिरग्रहणं शिष्टेन्द्रियवैकल्योपलक्षणार्थं, यथा अन्धादिः रूपादिग्रहणं न करोति तथा अविकलेन्द्रियोऽपि । रूपादीन् अन्धादिवत् पश्य स्वदेहं काष्ठवत् पश्येति यत्तत् प्रशान्तस्य लक्षणम् । योगी सर्वेन्द्रियव्यापृतिविरळो भवेदित्यर्थः ॥१४॥

धारणालक्षणम्

**मनः संकल्पकं ध्यात्वा संक्षिप्यात्मनि बुद्धिमान् ।**
**धारयित्वा तथाऽऽत्मानं धारणा परिकीर्तिता ॥ १५ ॥**

धारणालक्षणमाह—**मन इति** । बुद्धिमान् योगी सङ्कल्पात्मकं मनः तद्वृत्तिजातं **सङ्क्षिप्य** अथ निस्सङ्कल्पकं **ध्यात्वा आत्मनि** निर्विकल्पके प्रत्यग्भावपरिणते मनसि तथाविधं परमात्मानं **धारयित्वा** या प्रत्यक्परैक्यस्थितिः सेयं धारणेति **परिकीर्तिता** ॥ १५ ॥

तर्कलक्षणम्

**आगमस्याविरोधेन ऊहनं तर्क उच्यते ।**

तर्कलक्षणमाह—**आगमस्येति** । श्रुत्यनुगृहीतोहनमेव तर्क इत्यभिधीयते ॥

[1] प्रशान्तस्यैव—अ २.

समाधिलक्षणम्

समं मन्येत [1]यं लब्ध्वा स समाधिः प्रकीर्तितः ॥ १६ ॥

समाधिलक्षणमाह—सममिति । ब्रह्माहं, अहमेव ब्रह्म इति यं परमात्मानं मत्वा स्वविकल्पितप्रपञ्चजातं समं आत्मानमेव मन्येत स समाधिरिति श्रुतिभिः परिकीर्तितः ॥ १६ ॥

समाधिसिद्ध्युपायः

भूमौ दर्भासने रम्ये सर्वदोषविवर्जिते ।
कृत्वा मनोमयीं रक्षां जप्त्वा वै रथमण्डले ॥ १७ ॥
पद्मकं स्वस्तिकं वाऽपि भद्रासनमथापि वा ।
बद्ध्वा योगासनं सम्यक् उत्तराभिमुखः स्थितः ॥ १८ ॥
नासिकापुटमङ्गुल्या पिधायैकेन मारुतम् ।
आकृष्य धारयेदग्निं शब्दमेव विचिन्तयेत् ॥ १९ ॥
ओमित्येकाक्षरं ब्रह्म ओमित्येतन्न [2]रेचयेत् ।
दिव्यमन्त्रेण बहुधा कुर्या[3]न्मलविमुक्तये ॥ २० ॥
पश्चात् ध्यायीत पूर्वोक्तक्रमशो मन्त्रविद् बुधः ।
स्थूलादिस्थूलसूक्ष्मं च नाभेरूर्ध्वमुपक्रमः ॥ २१ ॥

[1] यल्लब्ध्वा समाधिः परिकीर्तितः—उ १. [2] रोचयेत्—अ, अ १.

[3] दमलमुक्तये—अ. दामलमुक्तये—उ, उ १, अ १, अ २. 'दात्ममलच्युतिं' इति शोधितं—क.

